# नर्मदाष्टकम्

## श्री शङ्कराचार्य कृतम्

सबिन्दु सिन्धु सुस्खलत् तरङ्ग भृङ्ग रञ्जितं
द्विषत्सु पापजातजातकारिवारि संयुतम् ।
कृतान्त दूत काल भूत भीति हारि वर्मदे
त्वदीय पादपङ्कजं नमामि देवि नर्मदे ॥ 1 ॥

त्वदम्बुलीन दीनमीन दिव्य सम्प्रदायकं
कलौ मलौघ भारहारि सर्वतीर्थ नायकम् ।
सुमच्छ कच्छनक्र चक्रवाक चक्रशर्मदे
त्वदीय पादपङ्कजं नमामि देवि नर्मदे ॥ 2 ॥

महागभीर नीरपूर पातधूत भूतलं
नमत् समस्त पातकारि दारितापदाचलम् ।
जगल्लये महाभये मृकण्डु सूनुहर्म्यदे
त्वदीय पादपङ्कजं नमामि देवि नर्मदे ॥ 3 ॥

गतं तदैव मे भयं त्वदम्बु वीक्षितं यदा
मृकण्डु सूनु शौनका सुरारि सेवितं सदा ।
पुनर्भवाब्धि जन्म सम्भवाब्धि दुःखवर्मदे
त्वदीय पादपङ्कजं नमामि देवि नर्मदे ॥ 4 ॥

अलक्ष्य लक्ष किन्नरामरासुरादि पूजितं
सुलक्ष्य नीर तीर धीर पक्षिलक्ष कूजितम् ।
वसिष्ठ शिष्ट पिप्पलादि कर्दमादि शर्मदे
त्वदीय पादपङ्कजं नमामि देवि नर्मदे ॥ 5 ॥

सनत्कुमार नाचिकेत कष्यपात्रि षट्पदैः
धृतं स्वकीयमानसेषु नारदादि षट्पदैः ।
रवीन्दुरन्तिदेव देवराज कर्म शर्मदे
त्वदीय पादपङ्कजं नमामि देवि नर्मदे ॥ 6 ॥

अलक्ष–लक्ष–लक्ष–पाप लक्ष सार सायुधं
ततस्तु जीवजन्तु तन्तु भुक्ति मुक्ति दायकम् ।
विरिञ्चि विष्णु शङ्कर स्वकीय धाम वर्मदे
त्वदीय पादपङ्कजं नमामि देवि नर्मदे ॥ 7 ॥

अहो धृतं स्वनं श्रुतं महेश केशजातटे
किरात सूत वाडवेषु पण्डिते शठे नटे
दुरन्त पाप तापहारि सर्वजन्तु शर्मदे
त्वदीय पादपङ्कजं नमामि देवि नर्मदे ॥ 8 ॥

इदं तु नर्मदाष्टकं त्रिकालमेव ये सदा
पठन्ति ते निरन्तरं न यान्ति दुर्गतिं कदा ।
सुलभ्य देहदुर्लभं महेशधाम गौरवं
पुनर्भवा नरा न वै विलोकयन्ति रौरवम् ॥ 9 ॥